## । भूमिरियं बलिदानस्य ।

एत बान्धवा ! दर्शयामि वस्तेजो हिन्दुस्थानस्य ।
अस्य मृत्तिका शिरसा वन्द्या भूमिरियं बलिदानस्य ।
वन्दे मातरम्... वन्दे मातरम् ।। ध्रु. ।।

उत्तरभागे रक्षणकर्ता नगाधिराजो विख्यातः ।
दक्षिणदेशे पदक्षालको महासागरः प्रख्यातः ।
पश्यत गङ्गायमुनातीरं परं पावनं भूलोके ।
स्थाने स्थाने यद्दिव्यत्वं नैव सुराणामपि नाके ।
एकमेव तत् स्थानं चैतद् देवानाम् अवतारस्य ।। अस्य० ।।१।।

रजपूतानाम् एतत् स्थानं खड्गे येषाम् अभिमानः ।
धर्मरक्षणे युद्धे, मरणं यैर्मन्यते सम्मानः ।
अत्रैवासीत् प्रतापवीरो विश्वेऽस्मिन् यो बहुमान्यः ।
शीलरक्षणे भस्मीभूता अत्रासंख्यः पद्मिन्यः ।
रजःसुपूतं वीरपदाब्जैः स्थानं चैतद् देशस्य ।। अस्य० ।।२।।

वङ्गोऽयं यद्धरणी हरिता मनोहारिणी सर्वत्र ।
निजराष्ट्रार्थं सिद्धा मरणे सन्ति बालका अप्यत्र ।
" रामकृष्ण-गौराङ्ग-विवेकानन्दप्रमुखा " यत्राऽऽसन् ।
" अरविन्दाद्याः " क्रान्तिकारकाः शान्तिपूजका यत्राऽऽसन् ।
जन्मभूरियं ' नेताजी ' ति प्रख्यातस्य सुभाषस्य ।। अस्य० ।।३।।

इयं दृश्यतां " महाराष्ट्र-भूर्यत्र ' शिवाजी ' भूपोऽभूत् ।
यस्य-" भवानीकरवालेन " म्लेच्छानां संहारोऽभूत् ।
स्थाने स्थाने पर्वत-भागे सामर्थ्याग्निः प्रकटोऽभूत् ।
घोषो " हरहर महादेव " इति बाले बाले प्राविरभूत् ।
कृतं हि लज्जा-रक्षणकार्यं शिवेन हिन्दुस्थानस्य ।। अस्य० ।।४।।

भक्तिमान् अयं दक्षिणदेशो गोदाकृष्णापरिपुष्टः ।
गगनस्पर्धित-शिल्पकलान्वित-गोपुरभालैर्विभूषितः ।
अत्र विद्यते सुजनस्थानं सीतापतिपदपरिपूतम् ।
अत्र शंकराचार्या वन्द्याः केरलभागे संभूताः ।
विजयनगरसाम्राज्यमिहासीत् ख्यातं हिन्दूधर्मस्य ।। अस्य० ।।५।।

( अनुवादकः पं. दिगम्बर अनन्त पण्ढरपुरे–घोडनदी–पुणे )

# असंस्कृतः शिक्षायोगः !

भारतशासनेन स्वतन्त्र-भारतस्य शिक्षा-विषये मार्गदर्शनार्थं १।१०।६५ दिनाङ्के डॉ. दौलतराम कोठारी महोदयानां नेतृत्वे नियुक्तेन शिक्षा-आयोगेन (एज्युकेशन-कमिशन) द्विसंवत्सर-पर्यन्तं भारतवर्षे सर्वत्र संचारं कृत्वा शिक्षाविद्भिः चर्चां कृत्वा स्वीयाः निष्कर्षाः भारत-शासनाय नचिरम् एव समर्पिताः सन्ति । विविधराज्यशासनैः तासु तासु भारतीयभाषासु ते निष्कर्षाः भाषान्तरीकृत्य तत्तत्प्रदेशवासिनां प्रजाजनानां ज्ञानार्थं विचारविमर्शार्थं च प्रसारिताः सन्ति । अस्माभिः महाराष्ट्रराज्यशासनेन 'महाराष्ट्र'-भाषायां प्रकाशितः निष्कर्षसंक्षेपः नचिरमेव सूक्ष्मेक्षिकया निरीक्षितः । आयोगाभ्यास-निरीक्षणावसरे स्वाभाविकम् एव 'किं तत्र प्रतिपादनं संस्कृतस्य विषये' इति विषये दत्तचित्ताः वयम् । परम् आमूलचूलं शिक्षा-आयोगस्य निष्कर्ष-संक्षेपं पठित्वा तत्र संस्कृतविषये किमपि मार्गदर्शनं कर्तुं कार्यजातं वा कारयितुम् असमर्थं शिक्षा-आयोगं दृष्ट्वा नैव चकिताः वयम् । संस्कृतस्य स्वतन्त्रभारते महत्त्वपूर्णं स्थानं नैव संमतं शिक्षाविदाम् एतेषां विषये ।

शिक्षा-आयोग-सदस्यैः संसूचिते त्रिभाषासूत्रे संस्कृतस्य नामापि नास्ति । परम् एते वराकाः सावेशं प्रतिपादयन्ति यत् स्वतन्त्रस्य संस्कृत-विश्वविद्यालयस्य अपि स्थापना शासनेन नैव कर्तव्या ' इति ।

भोगमात्रवादिनां पाश्चात्यानां मार्गदर्शनं स्वीकृत्य तया विज्ञान-मात्रनिष्ठविचारप्रणाल्या स्वीयां भारतीयां शिक्षानीतिं रचयितुं प्रवृत्तानाम् एतेषां विषये नैव कदापि संस्कृतसमाजेन संस्कृतहितकारकं किञ्चित् ते करिष्यन्ति ' इति स्वप्नेऽपि मन्तव्यम् । संस्कृतं नाम तेषां मतेन जीर्णं, शीर्णं, कालहीनं, त्याज्यं सर्वथैव विस्मरणीयं वस्तुजातम् । मूर्खहस्ते स्वर्णालङ्कारः स्थापितश्चेत् तस्य मनसि ये केचन तरङ्गाः स्वर्णविषये समुद्भविष्यन्ति न तावता भिन्नं किमपि तथाकथितानां शिक्षाविदाम् एतेषां विषये ।

स्वतन्त्रे भारते दैवदुर्विलासात् यद् यद् नाम संस्कृतविरुद्धं, संस्कृतिघातकम्, अधर्म्यं च तत् तत् सर्वम् अनुष्ठातुं प्रवृत्ते नः शासने संस्कृतसमाजेन व्रतमात्रनिष्ठया संस्कृतसेवाविषये यावदधिकं कर्तुं स्वयं प्रयतनीयम् । न केवलं दूषणीयं शासनम् । स्वात्मा अपि दूषणीयः । यतः संस्कृतानुरागिसमाजस्य दौर्बल्यम् उपेक्षावृत्तिः स्वार्थमात्रपरायणता एव कारणं संस्कृतहितघातस्य । नायं सामान्यरोगः सामान्योपचारैः दूरीकर्तुम् । राजयक्ष्मीभूतस्य अस्य विषये तन्निवारणार्थं रसायनमपि तादृगेव बलवत्तमम् अपेक्ष्यते । तन्नाम स्वात्मपरीक्षणं, सामाजिकं जागरणं, कर्तव्यानुष्ठाने स्वीये स्वीये प्रवर्तनम् । एतदर्थमेव अयि भारतीसमुपासकाः! उत्तिष्ठत ! जाग्रत !! प्राप्य वरान् निबोधत!!! संपादकः

पुणें ) महाराष्ट्रराज्यशासन-भारतकेन्द्रशासन-पुरस्कृता विश्वप्रिया ( मुम्बई

सौर १ माघ १८८८



# शारदा

संपादकः वसन्त अ. गाडगीळ.

वर्षम् ८ अङ्कौ ५–६

वार्षिकमूल्यम् रू. ५ * अस्य अङ्कस्य रू. ०.५०

## वन्दे मातरम्

वन्दे मातरम् ।
सुजलां सुफलां मलयज-शीतलाम् ।
सस्य-श्यामलां मातरम् ॥
वन्दे मातरम् ॥१॥
शुभ्र-ज्योत्स्ना-पुलकित-यामिनीम्
फुल्ल-कुसुमित-द्रुम-दल-शोभिनीम्
सुहासिनीं सुमधुर-भाषिणीम्
सुखदां वरदाम् मातरम् ।
वन्दे मातरम् ॥२॥

* * * * * * * * * * * * * * * * * * * * * * *

## रम्ये.... क्रीडास्थले क्रीड्यताम्

प्रत्येकं दिवसो भवत्यभिनवः प्रत्येकमेवोत्सवः ।
प्रातः प्रातरुदेति हन्त सविता तिग्मांशुमाली दिवि ॥
पृथ्वी सुन्दरसुन्दरैश्च विविधैः पुष्पैः फलैः शोभते ।
रम्येऽस्मिन् परमात्मना सुविहिते क्रीडास्थले क्रीड्यताम् ॥

जी १२ सेक्टर १४
चन्दीगड–१४

बहादुरचन्द्रः चापोत्कटः

## गणराज्य-दिनोत्सव-शुभचिन्तनम्

# तक्रं मिथ्या ! अहं सत्यम् !

अथैकस्मिन् कुग्रामे वृद्धा काचित् निवसति स्म । प्रतिदिनं सा एकस्मै संन्यासिने पात्रपेयं तक्रं प्रयच्छति स्म । स च संन्यासी शक्रदुर्लभं तक्रं लब्धुम् नियतं वृद्धायाः गृहं गच्छति स्म ।

अथैकदा सायंसमये देवालयात् प्रतिनिवर्तमाना वृद्धा अभिमुखं संन्यासिनम् अपश्यत् । तं च अपृच्छत्—

'किं मद्गृहात् आयाति भवान् ?' 'अथ किम् । '—प्राह संन्यासी । 'अपि लब्धं तक्रं ?' वृद्धया पृष्टम् । संन्यासी अब्रवीत् –

'नैव लब्धं भवति । भवत्याः स्नुषा गृहद्वारि स्थित्वा माम् अब्रवीत्–

'भोः संन्यासिन्, क्षमस्व मे । नक्तं बिडालेन सर्वं दुग्धं निपातितम् । नास्ति तक्रलेशोऽपि अधुना अस्मद्गृहे ।'' इति । संन्यासिनः उत्तरम् इदं श्रुत्वा कोपाविष्टा वृद्धा तं प्रत्युवाच––

'किम् इत्थम् उक्तं तया धृष्टया ? आयातु तर्हि भवान् मया सह ।' इत्युक्त्वा वृद्धा स्वगृहं प्रति जगाम । तक्रलुब्धः संन्यासी अपि ताम् अनुससार । गृहं प्राप्य वृद्धा गृहद्वारि स्थित्वा संन्यासिनं प्राह–

'भोः संन्यासिन्, क्षमस्व मे ।

नक्तं बिडालेन सर्वं दुग्धं निपातितम् ।

नास्ति तक्रलेशोऽपि अस्मद्गृहे अधुना ।' वृद्धायाः अनपेक्षितं वचः श्रुत्वा विमूढः संन्यासी तां पप्रच्छ––

'भवति! यदि तदेव कथनीयम् आसीत्, तर्हि किमर्थं वयम् आहूताः ?' वृद्धा सगर्वं प्रत्युवाच––

'संन्यासिन्, मम खलु इदं सदनम् । न मम स्नुषायाः । अहम् अेतस्य गृहस्य स्वामिनी । यत्किमपि कस्मै अपि कथनीयम्, अहं तत् कथयामि । का सा भवन्तं निवारयितुम् ? मम मुखात् श्रोतव्यं श्रुत्वा अधुना सुखेन साधयतु भवान् ।'

वराकः संन्यासी प्रतिनिवर्तमानः अचिन्तयत्––

'तक्रं मिथ्या अहं सत्यम् ।
तक्रं मिथ्या
अहं सत्यम् ।'

पुण्यपत्तन विद्यापीठम्
पुण्यपत्तनम् ७

विद्युल्लेखा गजानन वाघ
एम. ए. वर्गः ( संस्कृतम् )

## श्रद्धास्वरूपम् ।

श्रद्धा नाम विश्वासः, ज्ञानं, सत्यं, कार्यतत्परता इत्येवंप्रकारेण 'श्रद्धा' शब्दस्य बहुविधग्रन्थेषु विविधाः व्याख्याः विषयानुरोधेन व्यक्ति-स्वभावानुरूपतश्च कृताः । मयाप्यत्र यद् विविच्यमानम् अस्ति तदनुसारतः 'श्रद्धा' शब्दस्य व्याख्या दीयते यथा—

**'वेदेषु गुरुवाक्येषु सत्यबुद्ध्याऽवधारणम्'।**

ब्रह्मविद्याया उपदेष्टरि गुरौ तथाच वेदातवाक्येषु यः सत्यमूलको दृढविश्वासो विद्यते स एव 'श्रद्धा'।

**'त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।'**

त्रिगुणात्मकेयं सृष्टिः श्रद्धात्रयात्मिकापि अस्ति । एवं च सर्वेष्वपि प्राणिषु स्वभावतः—जन्मनः प्रभृत्येव श्रद्धाया आविष्करणं भवति । एवं च मानवः श्रद्धावानस्ति । भवतु सात्त्विकश्रद्धावान्, राजसश्रद्धावान् उत तामसश्रद्धावान् । श्रद्धा तु ईदृशी सर्वसामान्या शक्तिर्या नैव विशि-ष्टबुद्धिमत्तायां वा विशिष्टस्वभावे वर्तते । परंतु सा तु सर्वव्यापिनी नित्या च । केवलं प्राक्संस्कारादियं श्रद्धा सत्वरजआदिभिन्नास्ववस्थासु दृश्यते इत्येव । सर्वेषां कृत्यानि स्वस्वश्रद्धानुसारत एव भवन्ति । परंतु केचिदाधुनिकाः पाश्चात्यशिक्षणविभूषिताः परंपरागतधर्मानुसारतो वर्त-मानान् गतानुगतिकान् लोकानुपहसन्ति । परंतु न जानन्ति ते मन्दबुद्धयो यत्तेषां वर्तनं तु भिन्नसंस्कारानुसारत एव विद्यते इति । मानवस्य हृदि यादृशाः संस्काराः सञ्जातास्तादृशी एव तस्य श्रद्धा भवति, तादृशमेव तस्य मतं भवति, तदेव तेन प्रतिपाद्यते । अत एव भगवता श्रीकृष्णेन **'श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः'** इति भगवद्गीतायां कथितम् । आत्मसाक्षात्कारार्थं यथा शमः, दमः, उपरतिरित्येतेषां दैवी-गुणानां साहाय्यमत्यावश्यकं तथैव श्रद्धाया आनुकूल्यमपि साधकानामा-वश्यकमेव । इयं श्रद्धारूपिणी दिव्या शक्तिर्येषां हृदये विशुद्धसात्त्विक-स्वरूपे सदैव जागृता वर्तते, तेषां ज्ञानं भवति । तेन च तेषां शान्तिला-भोऽपि जायते । परंत्विदमत्र संस्मरणीयं यत्केवलं श्रद्धाबलान्मोक्षप्राप्ति-रसंभवनीयैव ।

**'श्रद्धावान् लभते ज्ञानं तत्परः संयतेन्द्रियः'।**

तत्परः संयतेन्द्रिय एव श्रद्धावान् ज्ञानं लभते, येन ज्ञानेन स मोक्षरूपामुत्कृष्टां शान्तिं समधिगच्छति । केवला श्रद्धा निरर्थकैव । सा तु तत्परता जितेन्द्रियत्वं च इत्येतयोः साहाय्यमपेक्षते । श्रद्धालुर्मनुष्योऽपि अलसः स्यादुद्यमहीनः स्यात् । तस्मात्—

'तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः' ।

इत्येवंप्रकारेण वर्णिता गुरुसेवाप्रणिपातादयो ये केऽपि ज्ञानावाप्ते-रुपायाः शास्त्रेषु कथितास्तेषु साधकानां तत्परतोद्योगशीलता वाऽत्याव-श्यकी । तथा चेन्द्रियनिग्रहः संयतेन्द्रियत्वमपि अतीवावश्यकम् ।

पूर्वमेव मया 'श्रद्धा' शब्दस्य व्याख्या 'सत्यबुद्ध्याऽवधारणम्' इति कृता । एवं च दृढविश्वासः । परं च स दृढविश्वासः सत्यबुद्ध्यैव भाव्यः । संस्कारानुसारतो विचारस्तथैव निश्चयोऽपि भवति । अयं त्वन्तःकरणधर्मः (मनोधर्मः) । बुद्धिर्यदि स्वरूपतो निर्मला तथापि संस्काराधीना । तस्माद् बुद्धेर्भिन्नसंस्कारादेव भिन्नविचारा भिन्ननिश्च-याश्च दरीदृश्यन्ते लोकेषु । यदा कदाचित्सद्बुद्धेरभावाद्विवेकराहित्याच्च हृतबलपुरुषाणां श्रद्धा मुहुर्मुहुः कम्पिता भवति, तदा विवेकेनैव तस्या स्थिरीकरणं—दृढीकरणं कर्तुं शक्यते । विवेकाभावाद् यः कोऽपि विश्वासो, या काऽपि श्रद्धा वर्तते सा 'अन्धश्रद्धा' इति शब्देन व्यपदि-श्यते । काकतालीयन्यायेनेयम् अन्धश्रद्धा तदा कदाचित्सफलीभवति, परं नायं सर्वसाधारणो नियमः । यथा अक्षेत्रे कुक्षेत्रे वा उप्ताद् बीजात्फल-निष्पत्तेरसंभवस्तथा च वप्तुरपि परिश्रमा विफलीभवन्ति । तेनैव प्रका-रेण विवेकाभावात् श्रद्धाया अपात्रे यत्स्थिरीकरणं भवति तेनायुषस्तथा च द्रव्यस्यापि हानिः सञ्जायते । अधुना केवलं स्वोदरपूर्तये साधुवेषं गृहीत्वा लोके व्यवह्रियमाणाः केचिन्मिथ्याचारिणः साधवो दृश्यन्ते । विवेकं विहाय केवलमन्धश्रद्धयैव—अन्धविश्वासेनैव तेषां ये भक्ताः सञ्जातास्तैः सर्वैरपि एतदेवाचिरादनुभूयते । एवं च साधकेन न कदाप्यन्धश्रद्धा स्वी-करणीया ।

'धर्म्यात् हि युद्धात् श्रेयोऽन्यत् क्षत्रियस्य न विद्यते' ।

'तस्माद् युध्यस्व भारत' इत्येवंप्रकारेण भगवता श्रीकृष्णेनो-दिष्टोऽर्जुनो न कदापि सहसैव प्रभुवचने श्रद्दधौ । कारणं तु हृदयदौर्बल्ये तस्य श्रद्धा मुहुर्मुहुः कम्पायमानाऽऽसीत् । अधोगतेर्मार्ग एव तन्म उन्नतेर्मार्ग आसीत् । परंतु यदा ज्ञानेन विवेकेन च तस्य मनः सुसंस्कृ सञ्जातम्, तस्य हृदये सत्यस्फुरणमभूत्, मनसः प्रक्षोभो विनष्टः, हृ च समत्वं संप्राप्तं, तदैव तस्य निश्चयः सञ्जातः अन्तिमे श्रेयस्करे मार्गे तदानीमेव तस्य सत्यमूला विवेकनिबद्धोज्ज्वला श्रद्धा प्रभुवचने सुदृ संभूता । तदानीमेव 'नष्टो मोहः स्मृतिर्लब्धा' 'करिष्ये वचनं तव' इत्युक्तं तेन ।

अस्तु ! अत्रेदमेव विशेषतः संस्मरणीयं यद्, यदा यथाशास्त्रं सत्तत्वविवेचनेनार्जुनस्य बुद्धेर्मालिन्यं प्रणष्टं, यदा च विकाररहितं सञ्जातं तस्य चेतस्तदैव प्रभुवचने तस्य श्रद्धा दृढमूलाऽभूत् । कस्मात्तर्हि शास्त्रानुसारतो विचारं कुर्वतां नराणां स्वनिश्चयविषये शङ्कालेशोऽपि न वर्तते, यतस्तेषां निश्चयस्तु शास्त्रानुगृहीतः अत एव सत्योऽस्तीति । तस्मात्तेषामन्तःकरणे सर्वकार्यविनाशकस्य संशयस्य प्रवेशोऽपि न भवति । परंतु यस्तु अज्ञः, अश्रद्धालुर्नाम सत्श्रद्धाविरहितश्च तस्य स्थितिः कीदृशी वर्तते, तत्तु—

'**अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति**' इत्येतेन भगवद्गीतायामेव वर्णितमस्ति। पूर्वमेव विवृतं मया, यत्साधकेन संशतेन्द्रियेण भाव्यमिति । एतद्विषये स्वल्पतया विचारयामः । श्रद्धा तु अन्तःकरणस्य धर्मः मनोधर्म एव । शास्त्रोक्तकर्मानुष्ठानेन यदान्तःकरणं विषयेभ्यः सर्वथैव विमुक्तं भवति, तेन हि यदा च समस्थितिर्वा मुक्तावस्था सञ्जायते तदैव सत्यमसत्यम्, उचितमनुचितमित्येतद्विषये निर्णयक्षमा बुद्धिर्भवति। तदानीमेव श्रद्धाया अभीष्टे परमश्रेयस्करमार्गे च याथातथ्येन स्थिरीकरणं भवति नान्यथा । परंतु केचिदाधुनिकविद्याविभूषिता विद्वांसो '**न तदस्माकं बुद्धेः संमतं तस्मान्न वयं तस्मिन्विषये श्रद्धास्यामः**' इत्येवं प्रकारेण सोपहासं प्रलपन्ति । तान्प्रत्यस्माकमयं प्रश्नो यद् भोः ! युष्माकं बुद्धिः प्रथमं तावत् शास्त्राचारेण शुद्धा–सुसंस्कृता अस्ति किम् ? नो चेत् सा सुबुद्धिर्वा कुबुद्धिः ? स विवेको वाऽविवेकः ?। प्रवासार्थं निर्गतेन पथिकेन मार्गे मित्रमिति यदि चोरेण सह संगतिः कृता स्यात्तर्हि काऽनवस्था जायेत, तद्विचार्यैव कल्पयन्तु भवन्तः ? अत एव भगवता गीतायाम् उपदिष्टम्——

'**तस्मात् शास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।**

'**ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि**' । शास्त्रोक्तवर्णाश्रमकर्मानुष्ठानेनैव चित्तशुद्धिः जायते, तेन हि कालान्तरेणेन्द्रियसंयमोऽपि साध्यते, येन चान्तःकरणं सदैव समता—योगस्थितिर्वा समुपलभ्यते । एवंप्रकारेण विद्यमानस्य संयतेन्द्रियस्य योगिनो बुद्धिरेव तस्य श्रद्धायाः संवर्धिनी भवति । '**नास्ति बुद्धिरयुक्तस्य भावना**' '**न चाभावयतः शान्तिरशान्तस्य कुतः सुखम्**' । अस्मिन् श्लोके अयुक्तस्य बुद्धिर्नास्ति इति यत् कथितं, तस्य मथितार्थस्त्वयमेव यदिन्द्रियदमनाभावे तस्य बुद्धिः सुखदुःखयोर्द्वन्द्वे सदैव निगडिता वर्तते, न सा कदापि स्थिरा भवति च । इयम् अस्थिरा बुद्धिरेव तस्य श्रद्धाम् अप्यस्थिरां चञ्चलां च करोति । परंत्वि-

न्द्रियनिग्रहिणो नरस्य बुद्धिः सुसंस्कृता विद्यते । तस्मात्तस्याः साहाय्येनाल्पकालादेव तस्यान्तिमयथार्थज्ञानस्य लाभो जायते । तत्रैव तस्य श्रद्धायाः स्थिरीकरणं, दृढीकरणं च भूत्वा तेनाचिरादेवात्मानन्द अनुभूयते । एवं च बुद्धेः साहाय्यादेव श्रद्धायाः सफलता पूर्तता च स्यात् । मोक्षसाधनार्थं यद् ज्ञानमावश्यकं, तदर्थं केवला श्रद्धा न कार्यकारिणी भवति, परंतु तत्परता, संयतेन्द्रियत्वं च नाम उद्योगः, इन्द्रियदमनं च इत्येतयोः साहाय्यम् अत्यावश्यकम् अपरिहार्यं च ।

तस्मात् श्रद्धान्वितेन मानवेनात्मसाक्षात्कारार्थं प्रथमं तावत् शास्त्रोक्तकर्मानुष्ठानं कर्तव्यं, तेन चात्मगतसामर्थ्यम्—अन्तःसामर्थ्यं संपादनीयं येन च योगस्य संप्राप्तिः सञ्जायेत नाम अन्तः समता समुत्पद्येत । यया च तस्य श्रद्धोर्जस्वला भूत्वा कार्यक्षमा प्रभवेत् । एवंविधया श्रद्धया युक्ता एव श्रेष्ठा योगिन इति—

'**श्रद्धया परयोपेतास्ते मे युक्ततमा मताः**' । इत्येवंप्रकारेण ते वर्णिताः । एवं चैतादृशं श्रेष्ठतमं योगं संसाध्य प्राक्कर्मानुसारतो जन्मनाप्रभृत्येव संप्राप्तायाः स्वभावज–श्रद्धायाः सदनुकूलतां संपाद्यैव सर्वैरात्मोद्धारः कार्यं इति चातुर्यपूर्णा किल योजनेति शम् ।

गोगटे चाळ, मुरारजीपेठ सोलापुरम् **शंकर दामोदर पेशवे**



ॐ

# परमपूजनीय-भगवद्भक्तरत्न-धुण्डिराजमहाराज-कवीश्वर-चरणकमलयोः अशीतितमवर्धन्त्युत्सव-मङ्गलमहोत्सवे समर्पितम् संमानपत्रम्

**श्रीगणेशदत्तगुरुभ्यो नमः ।**

लोकेऽभिज्ञप्रवृत्तेः स्थिरतरसुखतो नैव लक्ष्यान्तरं चेत्
तादृक्सौख्यस्य किञ्चित्परमिह न परज्ञानतः साधनं चेत् ।
तज्ज्ञानस्यापि लाभो गुरुचरणदयादृष्टिमात्रोदयश्चेत्
तं मुक्त्वा मुक्तिहेतुं गुरुवरमपरं कं चिरं चिन्तयेम ?॥

**अयि ! सदा हृदालिङ्गित-भगवत्पादाः पूज्यपादाः !**

परमप्रमोदस्थानमेतद् यदस्मिन्पूज्यपादानाम् अशीतिसमासमाप्ति-हेतुके सहस्रचन्द्रदर्शनशान्तिसत्कर्ममङ्गलप्रसङ्गे संगम्य स्वीकृतविग्रहाणाम् इव धर्माणां महर्षिसधर्मणां तत्रभवतां पावनपदसन्दर्शनादिनाऽऽत्मानं कृतार्थयितुं प्रभवामो वयं सर्व इति ।

**भोः कवीश्वर-कुल-कलशोदधि-कौस्तुभाः !**

अनूचान-तत्रभवदन्ववायजनुषो महापुरुषाः, पुराणपुरुषैकप्रवणतया प्रत्यहमविगीतं श्रीभागवतं व्याचक्षाणा जातुचित्केनचित्परीचिक्षिषुणा तत्स्थानस्थापितां शाकलसंहिताम् अपि अविकलतया कर्मणीव भक्तावपि लीलया समन्वाययामासुरिति नानामहिमानं धर्मैकतानं श्रीमत्सन्तानं को नाम भाविको नाभिवादयेत् ? ।

**भगोः शास्त्रयोनिमहानुक्रोशसरित्सागराः !**

सकलशास्त्रसारायमाणान्तःकरणाः सौजन्याभरणाः श्रीमत्तनूजन्म-दत्तात्रेयशास्त्रिचरणाः प्रदीपप्रवर्तितदीपनयेन, न केवलं पीयूषरसमुचा वाचा सुकृतैकमय्या कृत्याऽपि धर्ममर्मणि निगूढदर्शनरहस्ये मुक्तिनिदानभक्तावपि जनतामञ्जसा समञ्जसं प्रवेशयन्तीति तस्या एव विसृत्मरभगवद्दयाया महान्विशेष इत्यद्धा श्रद्दध्मः ।

'तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः' ।

इत्येवंप्रकारेण वर्णिता गुरुसेवाप्रणिपातादयो ये केऽपि ज्ञानावाप्तेरुपायाः शास्त्रेषु कथितास्तेषु साधकानां तत्परतोद्योगशीलता वाऽत्यावश्यकी । तथा चेन्द्रियनिग्रहः संयतेन्द्रियत्वमपि अतीवावश्यकम् ।

पूर्वमेव मया 'श्रद्धा' शब्दस्य व्याख्या 'सत्यबुद्ध्याऽवधारणम्' इति कृता । एवं च दृढविश्वासः । परं च स दृढविश्वासः सत्यबुद्ध्यैव भाव्यः । संस्कारानुसारतो विचारस्तथैव निश्चयोऽपि भवति । अयं त्वन्तःकरणधर्मः (मनोधर्मः) । बुद्धिर्यदि स्वरूपतो निर्मला तथापि संस्काराधीना । तस्माद् बुद्धेर्भिन्नसंस्कारादेव भिन्नविचारा भिन्ननिश्चयाश्च दरीदृश्यन्ते लोकेषु । यदा कदाचित्सद्बुद्धेरभावाद्विवेकराहित्याच्च हृतबलपुरुषाणां श्रद्धा मुहुर्मुहुः कम्पिता भवति, तदा विवेकेनैव तस्याः स्थिरीकरणं—दृढीकरणं कर्तुं शक्यते । विवेकाभावाद् यः कोऽपि विश्वासो, या काऽपि श्रद्धा वर्तते सा 'अन्धश्रद्धा' इति शब्देन व्यपदिश्यते । काकतालीयन्यायेनेयम् अन्धश्रद्धा तदा कदाचित्सफलीभवति, परंतु नायं सर्वसाधारणो नियमः । यथा अक्षेत्रे कुक्षेत्रे वा उप्ताद् बीजात्फलनिष्पत्तेरसंभवस्तथा च वप्तुरपि परिश्रमा विफलीभवन्ति । तेनैव प्रकारेण विवेकाभावात् श्रद्धाया अपात्रे यत्स्थिरीकरणं भवति तेनायुषस्तथा द्रव्यस्यापि हानिः सञ्जायते । अधुना केवलं स्वोदरपूर्तये साधुवेषं गृहीत्वा लोके व्यवह्रियमाणाः केचिन्मिथ्याचारिणः साधवो दृश्यन्ते । विवेकं विहाय केवलमन्धश्रद्धयैव—अन्धविश्वासेनैव तेषां ये भक्ताः सञ्जातास्तैः सर्वैरपि एतदेवाचिरादनुभूयते । एवं च साधकेन न कदाप्यन्धश्रद्धा स्वीकरणीया ।

'धर्म्यात् हि युद्धात् श्रेयोऽन्यत् क्षत्रियस्य न विद्यते' ।

'तस्माद् युध्यस्व भारत' इत्येवंप्रकारेण भगवता श्रीकृष्णेनोपदिष्टोऽर्जुनो न कदापि सहसैव प्रभुवचने श्रद्दधौ । कारणं तु हृदयदौर्बल्येन तस्य श्रद्धा मुहुर्मुहुः कम्पायमानाऽऽसीत् । अधोगतेर्मार्ग एव तन्मत उन्नतेर्मार्ग आसीत् । परंतु यदा ज्ञानेन विवेकेन च तस्य मनः सुसंस्कृतं सञ्जातम्, तस्य हृदये सत्यस्फुरणमभूत्, मनसः प्रक्षोभो विनष्टः, हृदि च समत्वं संप्राप्तं, तदैव तस्य निश्चयः सञ्जातः अन्तिमे श्रेयस्करे मार्गे । तदानीमेव तस्य सत्यमूला विवेकनिबद्धोज्ज्वला श्रद्धा प्रभुवचने सुदृढा संभूता । तदानीमेव '**नष्टो मोहः स्मृतिर्लब्धा**' '**करिष्ये वचनं तव**' इत्युक्तं तेन ।

अस्तु! अत्रेदमेव विशेषतः संस्मरणीयं यद्, यदा यथाशास्त्रं सत्तत्वविवेचनेनार्जुनस्य बुद्धेर्मालिन्यं प्रणष्टं, यदा च विकाररहितं सञ्जातं तस्य चेतस्तदैव प्रभुवचने तस्य श्रद्धा दृढमूलाऽभूत् । कस्मात्तर्हि शास्त्र-नुसारतो विचारं कुर्वतां नराणां स्वनिश्चयविषये शङ्कालेशोऽपि न वर्तते, यतस्तेषां निश्चयस्तु शास्त्रानुगृहीतः अत एव सत्योऽस्तीति । तस्मात्तेषामन्तःकरणे सर्वकार्यविनाशकस्य संशयस्य प्रवेशोऽपि न भवति। परंतु यस्तु अज्ञः, अश्रद्धालुर्नाम सत्श्रद्धाविरहितश्च तस्य स्थितिः कीदृशी वर्तते, तत्तु—

'**अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति**' इत्येतेन भगवद्गीतायामेव वर्णितमस्ति। पूर्वमेव विवृतं मया, यत्साधकेन संशतेन्द्रियेण भाव्य-मिति । एतद्विषये स्वल्पतया विचारयामः । श्रद्धा तु अन्तःकरणस्य धर्मः मनोधर्म एव । शास्त्रोक्तकर्मानुष्ठानेन यदान्तःकरणं विषयेभ्यः सर्वथैव विमुक्तं भवति, तेन हि यदा च समस्थितिर्वा मुक्तावस्था सञ्जायते तदैव सत्यमसत्यम्, उचितमनुचितमित्येतद्विषये निर्णयक्षमा बुद्धिर्भवति। तदानी-मेव श्रद्धाया अभीष्टे परमश्रेयस्करमार्गे च याथातथ्येन स्थिरीकरणं भवति नान्यथा । परंतु केचिदाधुनिकविद्याविभूषिता विद्वांसो '**न तद-स्माकं बुद्धेः संमतं तस्मान्न वयं तस्मिन्विषये श्रद्धास्यामः**' इत्येवं प्रका-रेण सोपहासं प्रलपन्ति । तान्प्रत्यस्माकमयं प्रश्नो यद् भोः! युष्माकं बुद्धिः प्रथमं तावत् शास्त्राचारेण शुद्धा—सुसंस्कृता अस्ति किम्? नो चेत् सा सुबुद्धिर्वा कुबुद्धिः? स विवेको वाऽविवेकः?। प्रवासार्थं निर्ग-तेन पथिकेन मार्गे मित्रमिति यदि चोरेण सह संगतिः कृता स्यात्तर्हि काऽनवस्था जायेत, तद्विचार्यैव कल्पयन्तु भवन्तः? अत एव भगवता गीतायाम् उपदिष्टम्——

'**तस्मात् शास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ**।

'**ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि**'। शास्त्रोक्तवर्णा-श्रमकर्मानुष्ठानेनैव चित्तशुद्धिः जायते, तेन हि कालान्तरेणेन्द्रियसंयमोऽपि साध्यते, येन चान्तःकरणं सदैव समता—योगस्थितिर्वा समुपलभ्यते। एवं-प्रकारेण विद्यमानस्य संयतेन्द्रियस्य योगिनो बुद्धिरेव तस्य श्रद्धायाः संव-र्धिनी भवति । '**नास्ति बुद्धिरयुक्तस्य भावना**' '**न चाभावयतः शान्तिर-शान्तस्य कुतः सुखम्**'। अस्मिन् श्लोके अयुक्तस्य बुद्धिर्नास्ति इति यत् कथितं, तस्य मथितार्थस्त्वयमेव यदिन्द्रियदमनाभावे तस्य बुद्धिः सुखदुः-खयोर्द्वन्द्वे सदैव निगडिता वर्तते, न सा कदापि स्थिरा भवति च । इयम् अस्थिरा बुद्धिरेव तस्य श्रद्धाम् अप्यस्थिरां चञ्चलां च करोति । परंत्वि-

न्द्रियनिग्रहिणो नरस्य बुद्धिः सुसंस्कृता विद्यते। तस्मात्तस्याः साहाय्येनाल्पकालादेव तस्यान्तिमयथार्थज्ञानस्य लाभो जायते। तत्रैव तस्य श्रद्धायाः स्थिरीकरणं, दृढीकरणं च भूत्वा तेनाचिरादेवात्मानन्द अनुभूयते। एवं च बुद्धेः साहाय्यादेव श्रद्धायाः सफलता पूर्तता च स्यात्। मोक्षसाधनार्थं यद् ज्ञानमावश्यकं, तदर्थं केवला श्रद्धा न कार्यकारिणी भवति, परंतु तत्परता, संयतेन्द्रियत्वं च नाम उद्योगः, इन्द्रियदमनं च इत्येतयोः साहाय्यम् अत्यावश्यकम् अपरिहार्यं च।

तस्मात् श्रद्धान्वितेन मानवेनात्मसाक्षात्कारार्थं प्रथमं तावत् शास्त्रोक्तकर्मानुष्ठानं कर्तव्यं, तेन चात्मगतसामर्थ्यम्—अन्तःसामर्थ्यं संपादनीयं येन च योगस्य संप्राप्तिः सञ्जायेत नाम अन्तः समता समुत्पद्येत। यया च तस्य श्रद्धोर्जस्वला भूत्वा कार्यक्षमा प्रभवेत्। एवंविधया श्रद्धया युक्ता एव श्रेष्ठा योगिन इति—

**'श्रद्धया परयोपेतास्ते मे युक्ततमा मताः'**। इत्येवंप्रकारेण ते वर्णिताः। एवं चैतादृशं श्रेष्ठतमं योगं संसाध्य प्राक्कर्मानुसारतो जन्मनाप्रभृत्येव संप्राप्तायाः स्वभावज–श्रद्धायाः सदनुकूलतां संपाद्यैव सर्वैरात्मोद्धारः कार्यं इति चातुर्यपूर्णा किल योजनेति शम्।

गोगटे चाळ, मुरारजीपेठ सोलापुरम् — **शंकर दामोदर पेशवे**



ॐ

# परमपूजनीय-भगवद्भक्तरत्न-
# धुण्डिराजमहाराज-कवीश्वर-चरणकमलयोः
# अशीतितमवर्धन्त्युत्सव-मङ्गलमहोत्सवे
# समर्पितम् संमानपत्रम्

**श्रीगणेशदत्तगुरुभ्यो नमः ।**

लोकेऽभिज्ञप्रवृत्तेः स्थिरतरसुखतो नैव लक्ष्यान्तरं चेत्
तादृक्सौख्यस्य किञ्चित्परमिह न परज्ञानतः साधनं चेत् ।
तज्ज्ञानस्यापि लाभो गुरुचरणदयादृष्टिमात्रोदयश्चेत्
तं मुक्त्वा मुक्तिहेतुं गुरुवरमपरं कं चिरं चिन्तयेम ?।।

**अयि ! सदा हृदालिङ्गित-भगवत्पादाः पूज्यपादाः !**

परमप्रमोदस्थानमेतद् यदस्मिन्पूज्यपादानाम् अशीतिसमासमाप्ति-हेतुके सहस्रचन्द्रदर्शनशान्तिसत्कर्ममङ्गलप्रसङ्गे संगम्य स्वीकृतविग्रहाणाम् इव धर्माणां महर्षिसधर्मणां तत्रभवतां पावनपदसन्दर्शनादिनाऽऽत्मानं कृतार्थयितुं प्रभवामो वयं सर्व इति ।

**भोः कवीश्वर-कुल-कलशोदधि-कौस्तुभाः !**

अनूचान-तत्रभवदन्ववायजनुषो महापुरुषाः, पुराणपुरुषैकप्रवणतया प्रत्यहमविगीतं श्रीभागवतं व्याचक्षाणा जातुचित्केनचित्परीचिक्षिषुणा तत्स्थानस्थापितां शाकलसंहिताम् अपि अविकलतया कर्मणीव भक्तावपि लीलया समन्वाययामासुरिति नानामहिमानं धर्मैकतानं श्रीमत्सन्तानं को नाम भाविको नाभिवादयेत् ? ।

**भगोः शास्त्रयोनिमहानुक्रोशसरित्सागराः !**

सकलशास्त्रसारायमाणान्तःकरणाः सौजन्याभरणाः श्रीमत्तनूजन्म-दत्तात्रेयशास्त्रिचरणाः प्रदीपप्रवर्तितदीपनयेन, न केवलं पीयूष-रसमुचा वाचा सुकृतैकमय्या कृत्याऽपि धर्ममर्मणि निगूढदर्शनरहस्ये मुक्तिनिदानभक्तावपि जनतामञ्जसा समञ्जसं प्रवेशयन्तीति तस्या एव विसृमरभगवद्दयाया महान्विशेष इत्यद्धा श्रद्दध्मः ।

**अयो अघ-सन्तमस-संहरण-सहस्रकिरणाः !**

तदेवमागर्भादाहिरण्यगर्भादाकुलपरिवृढादासन्ततेश्चाविच्छिन्न-ज्ञानभक्तिकर्माणः प्राणायमानधर्माणो दर्शन-रत्नाकर-सार-पारदृश्वानोऽत्रभवन्तः सन्ततं शान्त-स्वान्ता अपि सम्प्रति सम्प्रतिपन्न-सहस्रचन्द्रदर्शन-शान्ति साकम् अनेक-दत्तमखादि-सत्कर्मभिरनुतिष्ठन्तः सह-सहधर्म-सहधर्मिणी-सन्तति-प्रसन्तति-सन्ततिका अस्माभिरक्षिलक्षीक्रियन्त इति यत्सत्यं सुफलितं नः समेषां पुण्य-पुञ्जकल्पकुञ्जेन ।

**अये मृत्युञ्जय-चरणार्णोज-चञ्चरीकायमाण-मार्कण्डेयाः !**

अगणेय-सद्‌गुण-गणम् इवानिदंसमयसुलभमायुर्दैर्घ्यमप्यश्नुवन्तः पूज्यपादा, विश्वश्वःश्रेयसनिःश्रेयसविश्राणनपरायणभगवत्कृपया गत इवागामिन्यप्यनेहसि व्याहरन्तः, सदुपदेशान् परिहरन्तो, धर्माक्षेपान् आहरन्तो, विविधाध्वरान् उदाहरन्तो, भगवत्कथाः विहरन्तः परब्रह्माणि समुद्धरन्तश्चास्मादृशानन्तदीनान् इतरा इव परममङ्गलां " शतं जीव शरदो वर्धमानः " इति श्रुतिमप्यात्मनि समन्वर्थयन्त्विति तमेव सार्थीकृतसकलार्थिसार्थं, सर्वसमर्थं, दत्ताभयं, श्रीदत्तात्रेयं सभक्तिनतिसम्पत्ति सम्प्रार्थयामहे ।

राजराजसुहृद्‌गीतो राजविद्याविराजितः ।
विद्वद्राजावर्तिताङ्घ्रिर्धुण्डिराजो चिराजताम् ।।

## सहस्रचन्द्रदर्शन-शान्ति-महोत्सव-समितिः

## श्रीक्षेत्र-देऊळगांव-राजा (बुलढाणा-महाराष्ट्रम्)

मार्गशीर्ष शु. ११, १८८८ दि. २३ डिसेम्बर १९६६

---

## ॥ श्रीचन्द्रमौळीश्वर ॥

स्वस्तिश्रीमदखिलभूमण्डलालंकार - त्रयस्त्रिंशत्कोटिदेवतासेवित-श्रीकामाक्षीदेवीसनाथ-श्रीमदेकाम्र - नाथ - श्रीमहादेवीसनाथ - श्रीहस्ति-गिरिनाथसाक्षात्कार-परमाधिष्ठान-सत्यव्रतनामाङ्कितकाञ्चीदिव्यक्षेत्रे शारदा-मठ-सुस्थितानाम् अतुलित-सुधरासमाधुर्य- कमलासन-कामिनी-धम्मिल्ल-संफुल्ल-मल्लिकामालिका-निष्यन्द- मकरन्दझरीसौबस्तिक-वा-ङ्निगुम्भविजृम्भणानन्दतुन्दिलितम-नीषिमण्डलानाम् अनवरताद्वैतविद्या विनोदरसिकानाम् निरन्तरालंकृती-कृत-शान्ति-दान्तिभूम्नां सकलभुवन-चक्र - प्रतिष्ठापक - श्रीचक्र-प्रतिष्ठा-विख्यात-यशोऽलंकृतानां निखिल-पाषण्डषण्डकण्टकोत्पाटनेन विशदी-कृतवेदवेदान्तमार्ग - षण्मतप्रतिष्ठापकाचार्याणां -श्रीमत्परमहंस - परिव्राज-काचार्यवर्य-श्रीजगद्गुरुश्रीमच्छंकरभगवत्पादाचार्याणाम् अधिष्ठाने सिंहा-सनाभिषिक्त-श्रीमन्महादेवेन्द्रसरस्वती-संयमीन्द्राणाम् अन्तेवासिवर्य-श्रीमत्चन्द्रशेखरेन्द्रसरस्वतीश्रीपादादेशानुसारेण श्रीमज्जयेन्द्रसरस्वती-श्रीपादैः क्रियते नारायणस्मृतिः ।



प. पू. काञ्चीपीठ-'श्री'-चरणाः

अस्मत्पूज्यश्रीपरमेष्ठिगुरुभिः अष्टाशीतिवत्सरेभ्यः पूर्वम् ईश्वर-नामसंवत्सरे अनुष्ठेयपञ्चाङ्गविषये मध्यस्थपण्डितनिर्णयपूर्वकं विचारं कृत्वा आस्तिकानां दैवपितृकार्याणां साफल्यार्थं कश्चिन्निर्णयः कृतः। तद्यथा "ज्योतिःशास्त्रान्तर्गतगणनविषये तिथ्यादीनां भूमध्यदृक्सिद्धम् उपरागा-दीनां भूपृष्ठदृक्सिद्धं च ग्राह्यमिति श्रीवेङ्कटेश्वरदीक्षितसुन्दरेश्वरश्रौति-प्रभृतीनां पक्षः । भूमध्यः अन्यः भूपृष्ठः अन्यः, तिथ्यादीनां भूमध्यदृक्-तुल्यतैव ग्राह्या, प्रत्यक्षता न ग्राह्या इति श्रीकृष्णज्योतिषिकादीनां पक्षः । अत्र श्रीअप्पुशास्त्रिणः श्रीअप्पादीक्षिताः श्रीनिवासाचार्याः इत्येते मध्यस्था भूत्वा सुविचार्य श्री वेङ्कटेश्वरदीक्षित-सुन्दरेश्वरश्रौतीनां पक्ष एव

श्रेयान् इति निर्णयानुसारेण एतत् श्रीमुखपत्रिका दत्ता ।। नारायण स्मृतिः ।। ईश्वरसंवत्सरे कार्तिकमासि त्रिंशत्तारिका " इति ।

अयमेव अस्माभिरनुसृयते । सर्वैरप्यास्तिकैरनुसृत्य ऐहिकामुष्मिकस्वश्रेयसं प्राप्यताम् इति आशास्महे ।। अपि च यत्र शोधित-बीजसंस्कारादिशुद्धतिथिषु पूर्वोत्तरतिथ्योः परमनाडिकारूपौ यौ भोगौ तयोरन्तरं यत् तत् वृद्धिप्रसक्तौ पञ्चनाडीः नातिक्रामति । क्षयप्रसक्तौ षण्णाडीः नातिक्रामति । तस्मात् "बाणवृद्धिरसक्षयः" इति श्लोकानुसारिण्य एव अस्मत्परमेष्ठिगुरुनिर्णयरीतितिथयो भवन्ति ।

अस्मिन् व्याससदसि निजश्रावण-द्वाविंशत्रयोविंशत्तारिकयोः (७-८ सप्टें. १९६६) गुर्जरकर्णाटकमहाराष्ट्रवङ्गोत्कलान्ध्रद्रविडदेशीयाः ज्योतिःशास्त्रनिपुणाः पञ्चाङ्ग-गणक-पण्डिताः न्याय-वेदान्त-धर्मशास्त्र-पण्डिताश्च ज्योतिःशास्त्र-विचारार्थं संमिलिताः । अयनांशविषये प्रामाणिकीमेकां रीतिं निर्णेतुं विचारं कृत्वा अतिबाहुल्येन चित्रानक्षत्रपक्षम् एवादृतवन्तः । तस्मादेतदनुसृत्य "**दाते पञ्चाङ्गं प्रवर्तयतां पण्डित धुण्डिराजशास्त्री दाते** महोदयानां स्वश्रेयसपरंपरा भूयादित्याशास्महे तथैव आस्तिकाः **एतत्पञ्चाङ्गानुसारेण स्व-स्व-धर्म-कार्याणि कृत्वा** स्वश्रेयसपरंपरां प्राप्नुयुरित्याशास्महे ।"

श्रीकालहस्तिक्षेत्रम्
निजश्रावण-बहुल-दशमी
शाके १८८८

नारायणस्मृतिः

# 'कै. वेदाचार्य फाटकगुरुजी'

## ( जीवन-रेखा )

( प्रकाशक: – वे. वि. ह. घैसास, २७९।३ सदाशिव, पुणें २. मूल्यम् ३ रू. )

।। सरस्वती श्रुतिमहती महीयताम् ।।

अयि पाठका: ! विज्ञातमेव श्रीमतां श्रुतिरेव भगवती निखिलस्यापि वाङ्मयप्रकाशविश्वस्य सूर्यस्थानीयेति । अस्या एव च वेदापरपर्याया: अस्या: सकाशात् समुद्भूतास्तास्ता ज्ञानशाखा इत्यपि विश्रुतचरमेव । यथा खल्वभिहितमभियुक्तै: 'सर्वं वेदात् प्रसिध्यति' इति । एतस्या एव मननात् मुनिपदं प्राप्तवन्त: पूर्वे महर्षय: । एतस्या एव संविभागात् व्यासत्वमाप्तं द्वैपायनेन । अस्या एव स्वाध्यायेन राजर्षिपदभाजोऽभवन् नैके भूपाला: । इयमेव स्मृति-पुराण-मीमांसा-वेदान्तानां प्रसू: । इमामेव समवलम्बन्ते तत्त्वजिज्ञासव:, पुरावृत्तविदिषव:, वैदुष्यकामा:, संस्कृति-प्रगत्यन्वेष्टार:, पुराणमतानुयायिनो नव्यमतानुयायिनश्च सर्वेपीति वाचाम् अगोचर: खल्वस्या: प्रभाव: । अत एव तस्या एव परिशीलने निरता: स्वकर्तव्यत्वेनैव चास्या अध्येतार: विशेषम् एव महत्त्वं धारयन्ति । विद्यते पुनरुच्चारणवैशिष्टचं वेदानां महनीयतमम् । परमेशादाविर्भूता सरस्वतीयमिति श्रद्धया मुहुर्मुहु: परिपठनमेतस्या विदधाना अपि भारतवर्षेऽस्मिन् पुरातनकालादेव परम्परया स्फीतयशसो विभ्राजन्ते । यद्यपि उत्तेजनाभावात् खण्डितप्रायावस्थां प्राप्तेयं पद्धतिस्तथापि महत्त्वम् आवश्यकत्वं चास्या न तिरोहितं सुज्ञानाम् । सत्यपि सर्वविधलौकिकसमृद्धिवैधुर्ये वेदाध्ययनसरणिम् अद्यापि केऽपि महाभागा अनुसरन्ति चाप्नुवन्ति च स्वनामधन्यं यश: । ये चैतादृशास्तेषु कैलासवासिन: श्रीगोविन्दभट्ट-फाटकेति नाम्ना विश्रुता: वैदिकचूडामणय: प्रथन्ते ।

अस्मिश्च ग्रन्थे एषाम् एव जीवनपरिचय: प्रदत्त: । संपादकैश्चास्य नितराम् उपकृता महाराष्ट्रभाषाज्ञातार इति को नाम संदेह: । अत्र च काशीवास्तव्यानां विद्वन्मूर्धन्यानां द्राविड श्रीराजेश्वरशास्त्रिणां तथा च रा. स्व. सङ्घ-प्रमुखसञ्चालकानां श्रीगोळवलकरमहाभागानां पुरस्कारौ विद्येते ।

कौङ्कणप्रान्ते परशुरामक्षेत्रस्य समीपे वेङ्गुर्ले इति ग्राम: । तत्रैव श्रीगोविन्दभट्टानां पूर्वजा निवसन्ति स्म । तद्वंशीयश्रीरामेश्वरभट्टानां दुर्गाख्यपत्न्यां प्रसूतोऽयं चरितनायक: । ( १८०१ शकवर्षे ) ।। बाल्ये अभ्यासुता, व्यवस्थापरायणता, सद्वृत्तिश्चेत्यादयो गुणा: एतेषां प्रकटिता आसन् । वयस एकादशे वर्षे साङ्गलीग्रामे वेदाध्ययनार्थमागता: ।

तत्र वे. ताम्हणकरोपाह्वमहादेवभट्टगुरूणां सविधे संहिताब्राह्मणात्मकस्य ऋग्वेदस्याध्ययनं कृतम् । अनन्तरम् इन्दूरग्रामे वे. नरहरिललितानां साहाय्येन पुण्यपत्तने वे. वासुदेवभट्ट साने इत्येषां मार्गदर्शनेन च क्रमान्तम् अध्ययनं कृतम् । लिम्बगोवे-ग्रामेऽपि न्युष्य अध्ययनपूर्णता कृता । १८२८ तमे शकवर्षे दशग्रन्थपरीक्षा समभवत् । इदानीमेतेषां प्रथमविवाहो जातः । परन्तु पत्नी मृता । वैराग्येण चेतःपरं स्वाध्यायपूर्वकपरमेशसेवायाम् एव आयुः क्षपयितव्यमिति गोविन्दभट्टानामभिलाष आसीत् । तथापि केषामपि सिद्धानामुपदेशात् पुनरप्येतैर्विवाहं कृत्वा गृहस्थाश्रमः प्रारब्धः । १८३१ तमे शकवर्षे पुण्यपत्तनस्थ-वेदशास्त्रोत्तेजकसभायाः परीक्षां प्रदाय पुण्यपत्तन एव न्युष्य स्वगृहे वेदाध्यापनम् एतैः प्रारब्धम् । एते खलु स्मार्ताग्निसमुपासका आसन् । विद्यार्थिजनेषु करुणापरायणाः तथापि कर्तव्यविषये कठोरा आसन् । महाराष्ट्रेषु नगरे नगरे वैदिकवृन्दैः एतेषां संमानः कृतः । इतरेभ्यः वेदविद्भ्यः गोविन्दभट्टानां वैशिष्टचमिदं यत् श्रीमद्भिः गोविन्दभट्टैः पारेत्रिशतं विद्यार्थिनः वेदाक्षरेषु सम्यक् परिचायिताः । एते हि वेदाध्ययनसरणेः न केवलमनुसर्तारः पुरस्कर्तारो वा किन्तु प्रचारका अप्यासन् । वेदेन सह शास्त्राध्ययनमप्यावश्यकमेवेति धारणासीदेतेषाम् । एवं तपःपूर्णम् एतेषां जीवितं १८६७ शकवर्षीये श्रावणमासे मर्यादितम् अभवत् ।

एतेषां नाम्ना पुण्यपुरवासिभिः प्रभूतं स्मारकं कृतम् । डॉ. राहूरकर डॉ. सहस्रबुद्धे-इति विद्वद्वर्याभ्यां चरितमेतदेतेषां विलिख्य साधु प्रदर्शितं चरित्रनायकस्य तत्तद्वैशिष्टचनिकुरम्बम् ।

वेदाध्ययनस्य महत्त्वमाकलय्येदानीं महाराष्ट्र-शासनेन मान्यवैदिकविदुषां सत्कारोऽनुष्ठीयते । प्रशस्यतममेतदिति तु निश्चप्रचमेव । किन्तु सेयं पद्धतिः वैदिकविदुषां पोषणार्थं वेदाध्ययनवृद्धये च कथं क्षमेतेति चिन्तनीयमिदम् । वेदानुयायिभिः प्रपठ्य चरितमेतत् निर्वर्तयितव्यं तावद् हार्दमपि आनृण्यमिति विज्ञाप्य विरमामः ।

वालचन्दनगरम् ( पुणे ) —पं. औदुम्बरकर वासुदेवशास्त्री

## परीक्षण-परीक्षणम्

मान्याः शारदासम्पादकाः,

अद्य एव अधिगतः मया शारदायाः 'विवेकानन्द'– युतः अङ्कः। तत्र मदीयम् अप्पाशास्त्रिविषयकं पुस्तकम् उद्दिश्य प्राध्यापकैः केळकर-महोदयैः केचन विचाराः प्रकटीकृताः यान् अनुलक्ष्य वक्तव्यं मे किञ्चिद् आपतति। न मदीयं पुस्तकं नाम आधुनिके संस्कृते समुत्पन्नः अनन्य-साधारणः ग्रन्थराजः। अतः यावच्छक्यं सङ्क्षेपतः मनोगतं मे प्रकटी-करिष्ये। कृपया मुद्र्यताम् इति विज्ञप्तिः।

प्राध्यापकमहोदयैः मद्विषये बहवः किल साधुवादाः स्वीये लेखे अन्तर्भाविताः। न जाने पात्रम् अस्मि न वा सर्वेषां तेषाम्। एतत् तु असंशयं वक्तुं शक्यते– मनुष्यस्वभावसाधारण्यात् आनन्दितः अहं तान् साधुवादान् पठित्वा। आभारी अस्मि परीक्षकमहोदयानाम्।

अथ केळकरमहोदयैः प्रकटीकृतानां विचाराणां विषये।

१. न हि मया गूढताभावः निबन्ध-सन्दर्भे दोषत्वेन स्थापितः। ५३–५४ पृष्ठयोः एतत्सम्बद्धे विवरणे 'कथा, कादम्बरी, साहित्यम्' इत्यादयः शब्दाः, शाकुन्तलादीनि च निदर्शनानि वर्तन्ते, न कुत्रापि 'निबन्ध'शब्दमात्रम् अपि। अन्यच्च, षट्पञ्चाशत्तमे पृष्ठे अस्य रसिक-मनसः अप्रसादकारिणः घटकस्य कालप्रभावे समावेशः कृतः, न तु दोषेषु।

२. अप्पाशास्त्रिणः कुतः विष्णुशास्त्रिभिः तुल्याः तत् षष्टितमे पृष्ठे मया स्पष्टीकृतम्। तानि साम्यस्थलानि अनिराकृत्य एव, शिवराम-पन्तैः कुतः साम्यम् इति अस्पष्टीकृत्य एव, कथं केळकरमहोदयाः मया निर्दिष्टां तुलनाम् अपसारयन्ति? असंशयम् अप्पाशास्त्रिणां शिवरामपन्तैः किञ्चित् साम्यं दर्शयितुं शक्यं, परं न अत्र सन्दर्भः साम्यमात्रप्रदर्शनस्य। केन महत्तमं साम्यम् इत्येषः अत्र चिन्तनविषयः। अन्यच्च, शिवराम-पन्तानां यौ प्रधानौ विशेषौ–आदेः अन्तं यावत् काल्पनिकता अथवा वक्रोक्तिपूर्णता–तौ अप्पाशास्त्रिणां वाङ्मये प्रायशः न स्तः। (अत्र वक्रोक्तिशब्दः न संस्कृतालङ्कारिकाणाम् अभिमते अर्थे।)

३. विषयवैविध्यविवरणे न क्वापि मया कालिदासः उल्लेखितः। अथ 'आदि'-शब्देन यदि तत्परिच्छेदगताः (पृ. ३–४) वेलसप्रभृतयः अभिमताः प्राध्यापकमहोदयानां तर्ह्यपि न दोषः। अत्यन्तं दुर्लभं वैवि-ध्यम् इति वेल्सप्रभृतिनाम् उल्लेखे तात्पर्यं, न तु ते पत्रकाराः आसन् न वा इति, वैविध्याभावः तेषां दोषभूतः इति वा।

४. सत्यं, वर्गीकृताः अप्पाशास्त्रिणां विशेषाः प्रभावैकात्म्यं न धारयन्ति । अत एव लिखितः मया त्रयस्त्रिंशः परिच्छेदः (पृ. ५१) यत्र सर्वे विशेषाः संगृहीताः । अत एव आविर्भवति तदनुगामी परिच्छेदः सर्वेषां विशेषाणां साकल्येन मूल्यम् अन्विष्यन् । अन्यच्च, पृथक्करणं (अॅनॅलिसिस्) विना गभीरविचारपरायणे 'प्र'-बन्धे विवरणं कथं सम्भवति ?

५. मदीये पुस्तके एकैकविशेषविवरणसमये विचारः, अप्पाशास्त्रिवाङ्मयात् प्रमाणं, विचारोपसंहारः, इत्येषा रचना विद्यते । किम् अतः परम् अपि (अनावश्यकस्य) विस्तरस्य अपेक्षा करणीया ?

६. यत्र उद्धरणम् अप्पाशास्त्रिसाहित्यसौन्दर्यं स्पष्टीकर्तुं प्रदत्तं तत्र तत्र (पृ. ६, ७, ९, ११, १३, १४, १७, २०-२१, २७-२८) यथाशक्ति सौन्दर्यकारणानि विवृतानि इति अङ्गीकुर्युः परीक्षकमहोदयाः अपि । यत्र तु व्यष्टित्वविवरणाय उद्धरणानि प्रदत्तानि तत्र किमर्थं भाषासौन्दर्यं विवेचनीयम् ? अभ्युपगच्छामि यत् तानि उद्धरणानि नितरां मोहकानि भाषासौन्दर्यविवेचनमोहं मनसि उत्पादयन्ति इति, परम् अप्रस्तुतं तत् विवेचनं ग्रन्थरूप-विषये दक्षेण लेखकेन परिहरणीयम् एव । तस्मिन्, तलटिप्पणेषु कृतेऽपि केवलं पूर्वं विवृतानां सौन्दर्यस्य साधारणानां हेतूनां पुनः व्यक्तिशः प्रपञ्चः इत्येव रूपं स्यात् पुनरुक्तिदोषदं तस्य, भवेत् च तलटिप्पणग्रन्थः प्रधानग्रन्थाद् अपि बृहत्तरः, अनुभवेयुः च शारदासम्पादकाः प्रकाशनयोजनायां कष्टम् ।

७. क्षम्यतां, परं भ्रमः किल प्रतिभाति अयं परीक्षकमहोदयानां यद् अप्पाशास्त्रिकाले या परिस्थितिः आसीत् सा नितान्तं महत्त्वपूर्णा मदीयस्य प्रतिपादनस्य कृते इति । सप्तपञ्चाशत्तमे पृष्ठे केवलं त्रीणि एव वाक्यानि इमां परिस्थितिं परामृशन्ति । एष हि परिस्थितिविचारः केवलं दोष-कालप्रभाव-विवेकाय उपयोगी ।अतः स विवरणौघे यथास्वस्थानम् आविर्भवति ।

८. न अहं वाचकान् अधिक्षिपामि । न च अहं परिश्रमैः क्लान्तः । यान् उद्दिश्य येषां च कृते अहं कमपि वाङ्मयबन्धं प्रणयामि तान् एव अधिक्षेप्तुं कथं साम्प्रतं शक्यं च ? मदीयः हि अप्पाशास्त्रिप्रबन्धः नाम न मे परिश्रमाणां सीमा । शक्यते इतोऽपि अधिकं यत्नं तनितुम् । न वा अहं असहृदयैः असहानुभवैः वा संस्कृतज्ञैः पीडितः । यदा केळकरसदृक्षाः केचन एतावता चिन्तनेन मदीयां रचनाम् अवलोकयन्ति तदा कुतो नाम मे निराशा, निराशेन च सता मया संस्कृतज्ञाधिक्षेपः ?

सत्यं, मनसि मे अधिक्षेपभावना क्रोधभावना वा विद्यते । परं न

सा कथमपि सर्वान् संस्कृतज्ञान् प्रति । ये हि 'वयं संस्कृतस्य प्रवक्तारः' इति कण्ठशोषं जोघुष्य किङ्किणीमात्रम् न प्रददते संस्कृतोद्धारकार्याय, 'वयं संस्कृतज्ञाः वयं संस्कृतज्ञाः' इति पृष्ठताडं संश्राव्य न पठन्ति पृष्ठमपि वज्रभेदिन्याः अपि प्रसन्नप्रपातरमणीयायाः अपि नूतनायाः संस्कृतरचनायाः, केवलं नूतनाम् इतिहासगवेषणापद्धतिम् आङ्ग्लीं वा जानन्ति इति पाण्डित्यम् आत्मनि हठादेव आरोप्य उपहसन्ति संस्कृत-शास्त्रसेवायां व्यतीताखिलजीवनान् अपि विद्याधनान् शास्त्रिपण्डितान्, ये च भ्रमश्रद्धाः रुध्नन्ति नूतनं निर्माणं संस्कृते तेषां तेषां विषये रोषं जोषयितुम् आत्मानं गृहीतजन्मानं मन्यते अयं जनः । अहो दुःखं यत् न अद्यापि दहति एवंविधजनहृदयस्थितानि लूताजालानि मदीया तीव्रा भावना । न धक्ष्यति सा जातुचित् निखिले अपि मम आयुषि । परं न कदापि चिन्तयिष्यति मे मनः यद् एवंविधानां जनानाम् आचरणं समर्थ-नीयम् इति । वमिष्यति एव तत् तं क्रोधं यं संहर्तुं कालमरुतः अपि न अलं स्युः ।

वर्तन्ते मदीये निबन्धे केचन दोषाः । (साहित्यपरीक्षणस्य न सः अतिसूक्ष्मः आविष्कारः इति प्रत्येति मे मनः अधुना ।) परं न ते प्रा. केळकरमहोदयैः प्रतिपादितेभ्यः दोषेभ्यः अनन्याः । जातुचित् भगवतः कालनाथस्य अस्यां सन्ततायां यात्रायां स्वग्रन्थदोषाविष्करणाय अपि स्यात् मे कदाचित् अवसरः । तदा अहमेव शस्त्रपाणिः सन् स्वं ग्रन्थम् उपस्रप्स्यामि इत्यत्र मा संशय्यताम् आधुनिके संस्कृते दत्तदृष्टिभिः ।

हार्वर्ड-विश्वविद्यालयः — अशोकशर्मा अकलूजकरः
हार्वर्ड, अमेरिका दि. ४ एप्रील १९६६

---

## महाराष्ट्र-संस्कृत-परिषदः सोलापुर-मण्डलशाखा

**सोलापुरम्** दि. २७ डिसेम्बर १९६७ (शारदा-प्रतिनिधिद्वारा)

"राष्ट्राध्यक्षेभ्यः महामन्त्रिणी-पर्यन्तं सर्वे शासकाः संस्कृतस्य महत्तां गायन्ति। परं लोकसभायां सत्यपि बहुमते स्वीये संविधाने संस्कृतोपकारकं किमपि कर्तुं न ते सिद्धाः। आर्थिकीं हानिं स्वीकृत्यापि मद्यपाननिर्बन्धं कुर्वाणाः शासकाः राष्ट्रैक्यार्थम् आवश्यकं संस्कृतस्य शालासु अनिवार्यं शिक्षाप्रबन्धं कर्तुं नेच्छन्ति। अफगाणिस्थानसदृशे यवनराष्ट्रे अपि संस्कृतशिक्षणम् अनिवार्यम्। परं भारतवर्षे तथा नास्ति। शास्त्रीयपरिभाषोपकारकं संस्कृतं राष्ट्रभाषापदे सत्वरं स्थापयितुं सर्वैरपि बद्धपरिकरैः भाव्यम्।" इति सुस्पष्टम् आदिष्टं महाराष्ट्रसंस्कृतपरिषदः अध्यक्षैः साहित्यचार्यैः पं. हरिदास बालशास्त्रिभिः परिषदः सोलापुर-मण्डलोद्घाटनसमारोहे।

अनाथ-विद्यार्थी-गृह-सभामन्दिरे डॉ. राजाभाऊ जोशी महोदयानां प्रास्ताविक-स्वागत-भाषणेन प्रारब्धे शाखारम्भसमारोहे परिषदः प्रधान-कार्यवाहैः 'शारदा-' संपादकैः पं. गाडगीळ वसन्तरायैः परिचायिता स्वीये सस्कृतभाषणे परिषद् उक्तं च- "स्वतन्त्रे भारते संस्कृतभाषा निरालम्बा विद्यते। तां सनाथीकर्तुं सर्वैरपि संस्कृतानुरागिभिः शासनेन संस्कृतविषये क्रियमाणाम् उपेक्षावृत्तिम् उपेक्ष्य स्वयं यावदधिकं संस्कृत-सेवार्थं प्रयतनीयम्। आत्मपरीक्षणपरैः जागृतैः सर्वैः संस्कृतोपासना प्रारब्धा चेत् समेषां समुत्कर्षः सुनिश्चितः।"

पं. मोहोळकर शंकरशास्त्रिभिः धन्यवादेषु प्रकटीकृतेषु समाप्तं सभाकार्यम्।

सायंतने सत्रे पं. गाडगीळ वसन्तरायैः समुपस्थितसुरगवीसेवकानां सदसि विविध-प्रश्नानां विषये समुचितं शङ्कासमाधानं कृतम्। शोभ-नावसरे अस्मिन् पं. बाळकृष्ण व्यासमहोदयैः परिषदः कार्यार्थं ५१ रूप्य-कात्मकं साहाय्यम् उद्घोषितम्।

---

मृतेन कैकेन गजेन हानिः पदे पदे चेद् गजका म्रियेरन् ।
पाषाणवद् भव्यवपूंषि तेषाम् आक्रम्य गच्छेयमहं रणाग्रे ॥१६॥
इत्येवमात्यन्तिकदर्पमत्तः प्रभूतसेनानुगतश्चचाल ।
समूलमुन्मूलयितुं स्वशक्त्या नवोदितं राज्यमदः शिवाजेः ॥१७॥
वेगादुपेतस्तुलजापुरं तत् प्राचीनपीठं तुलजाभवान्याः ।
भक्तार्तिविध्वंसधृतव्रतायाः शिवाजिसम्पूजितविग्रहायाः ॥१८॥
आज्ञापयामास तदैव सर्वान् आदेशवश्यान् पृतनाधुरीणान् ।
दृश्येत यद्दैवतमूर्तिजातम् अदृश्यतां तन्नयत प्रहारैः ॥ १९ ॥
अहं स्वयं तां तुलजाभवानीं मच्छत्रुपूज्येति विनाशयामि ।
येनं प्रकृष्टोज्ज्वलतां भजेत सा मूर्तिभेत्तेति मदीयकीर्तिः ॥२०॥
इत्यूचिवानुद्धृतचण्डदण्डो दुधाव वेगात् तुलजाभवानीम् ।
पिशाचभूतो महिषासुरोऽसावात्मप्रहन्त्रीमिव हन्तुकामः ॥२१॥
सरोषदष्टाधरनिर्गलन्ति स्वशोणितान्येव हि लेलिहानः ।
निर्भर्त्सयन्नष्टसशस्त्रपाणिं तां देवतां दैत्यवदित्यवोचत् ॥२२॥
समग्रसामर्थ्यवतीत्यखण्डं त्वं काफिराणामसि पूजनीया ।
इस्लामधर्मानुचरत्वलब्धं पश्याद्य सामर्थ्यमिदं मदीयम् ॥२३॥
तवाष्टहस्तप्रधृतानि शस्त्राण्यष्टापि नष्टान्यवगच्छ सद्यः ।
मदुद्धृतैकद्रुघणोग्रघातैः महाद्रिनिष्पेषणशक्तिमद्भिः ॥२४॥
सिंहस्तवायं वहनास्पदं च विभाति मे कुक्कुरतुल्य एव ।
व्यात्ताननो मामवलोक्य मन्ये भियेव संक्रन्दति शक्तिहीनः ॥२५॥
सहस्व निर्घातमिमं प्रचण्डं यश्चूर्णसात् त्वामचिरात् करोति ।
यद्यस्ति शक्तिः प्रतिकर्तुमेनं तां द्रष्टुमिच्छत्यफझुल्ल एषः ॥२६॥
स्वच्छन्दमित्थं बहु गर्हयित्वा तां देवतां दुर्धरशक्तिमत्तः ।
संपिण्डितां भक्तिमिवात्मशत्रोः क्रोधातिरेकात् प्रजहार नीचः ॥२७॥
तथाप्यविश्रान्तमहाप्रकोपो निर्भग्नमूर्तेः पुरतो भवान्याः ।
तदीयवात्सल्यमयीमपापां धेनुं सवत्सां सहसा जघान ॥२८॥
इत्थं स तां हिन्दु-जनातिपूज्यां भित्त्वा भवानीं जननीं च हत्वा ।
प्रह्लादितो धार्मिकवर्यमानी विच्छेत्तुमैच्छद् बत पाण्डुरङ्गम् ॥२९॥
हस्त्यश्वपादातचमूपतींश्च बभाण रोषादिव रौद्रकण्ठः ।
झञ्झाप्रवेगेन वरूथिनीयं पुरः पुरं पण्ढरपूर्वमेतु ॥३०॥

स्वादेशमन्वग् स महातरस्वी सेनानुयातस्तुरगाधिरूढः ।
ययौ रजो-दुर्दिनहेतुभूतम् उद्धूनयन् धूमिलधूलिजालम् ।।३१।।
तच्चन्द्रभागातटसन्निविष्टं वैकुण्ठमूर्वीतलसङ्गभिन्नम् ।
श्रीविष्णुभक्तोत्तमपुण्यतीर्थं पुरं प्रपेदेऽनुपदं स पापः ।।३२।।
लत्ताप्रहारेण पदे पदे ते तत्रोन्मदा म्लेच्छखरा अभिन्दन् ।
मायाधृतासंख्यकलेवरस्य पाषाणमूर्तीन् परमेश्वरस्य ।।३३।।
हा लोकसंरक्षणकर्मकष्टान् नूनं कटिस्थापितदीर्घपाणि ।
तद्दैवतं हन्त तदा कथञ्चिल्लोकैररक्षि क्षणलब्धधैर्यैः ।।३४।।
विजापुराधीश्वरपक्षपाती परं रिपोराप्त इति प्रकोपात् ।
ततः स निंबालकराभिधं तं जग्राह कालायसशृङ्खलाभिः ।।३५।।
हिंस्रः स तं शत्रुकलत्रबन्धुं विहिंसितुं श्वापदघातमैच्छत् ।
उत्प्रेक्षमाणो मृगयाविनोदं ततोऽप्यरेराधिमकाण्डपातम् ।।३६।।
तच्चेष्टितान्येवमतीव घोराण्याकर्ण्य रात्रिन्दिवमाकुलोऽपि ।
धीरः शिवाजिर्न चचाल किञ्चित् सुनिश्चयात् स्वस्य न चापि दुर्गात् ।।
यदा यदैकैकममुष्य घोरं दुश्चेष्टितं स श्रुणुते स्म धीरः ।
तदा तदा तद्वधनिश्चयेऽसौ वज्रस्थिरोऽभूत् प्रबलः शिवाजिः ।।३८।।
विज्ञाय वीरो रणकर्मविज्ञो बलाबलं शात्रवमात्मनश्च ।
प्रभूतकोपोऽपि विमृश्यकारी कौटिल्यनीतिं दृढमाऽऽललम्बे ।।३९।।
कृष्णासरित्तीरगतं सुतीर्थक्षेत्रं प्रति प्राप्तममुं निशम्य ।
स्वराज्यसंरक्षणचिन्तनार्तो निमेषनिद्रामपि नो जगाहे ।।४०।।
अहर्निशं निश्चलधैर्यशाली स्वभक्तिभूतां तुलजाभवानीम् ।
ध्यायन् कदाचित् क्षणलब्धनिद्रः समक्षमेवैक्षत सुप्रसन्नाम् ।।४१।।
ज्योतिर्मयेनोज्ज्वलविग्रहेण विभ्राजमाना जगदम्बिका सा ।
वात्सल्यपीयूषमयेक्षणेन परामृशन्ती शिवमित्युवाच ।।४२।।
वत्स ! त्वदन्यो जगतीतलेऽस्मिन् न जातु जातो न जनिष्यते वा ।
मदेकनिष्ठः खलु धर्मवीरो यदेकसंस्थं हृदयं मदीयम् ।।४३।।
नराकृतीनां नवराक्षसाणां चिरातुरा शोणितमस्मि पातुम् ।
तृषं मदीयामपहर्तुमीशो वत्स त्वमेकः परमप्रियो मे ।।४४।।
जगन्निवासाऽपि निवासहीना चिरादभूवं बत हिन्दुदेशे ।
शत्रुञ्जयं यत्र न दिव्यतेजो न तत्र वर्ते न रमे कदापि ।।४५।।
किन्त्वद्य या खड्गलतां बिभर्षि दुःशत्रुविध्वंसपटीयसीं त्वम् ।
तत्रैव तेजांसि ममोत्स्फुरन्ति त्वदीयकीर्तिद्युतिभास्वराणि ।।४६।।

अभ्येति यस्त्वामपहन्तुकामः प्रकाममत्तो महिषासुराभः ।
स सर्वनाशं सहसाभ्युपेतु त्वत्स्पर्शलेशादिति मे मनीषा ॥४७॥
उत्तिष्ठ तत् त्वं नरसिंह शीघ्रं युध्यस्व युध्यस्व पराक्रमेण ।
उरोविदारं नवदैत्यमेनं निहत्य विन्दस्व यशः श्रियं च ॥४८॥
साक्षात्कृतिं स्वप्नगतामितीमां समाधिकल्पां खलु सद्विकल्पाम् ।
स वीरयोगी ह्यनुभूय दिव्यां तस्थौ चिरं ध्याननिमीलिताक्षः ॥४९॥
तस्याविरासीन्मुखचन्द्रबिम्बे काचित् स्मितोद्दीप्तिरदृष्टपूर्वा ।
आकेकरे लोचनपद्मयुग्मे स्वानन्दजन्याम्बुलवप्रपातः ॥५०॥
स्वेदाम्बुसम्पूरितरोमकूपो रोमाञ्चसंफुल्लपवित्रगात्रः ।
शुचिस्मितोऽसौ शुशुभे शिवाजिरब्धेर्विनिर्यन्निव कल्पवृक्षः ॥५१॥
स व्युत्थितः स्वप्नसमाधितोऽपि निमील्य नेत्रे स्थितवांश्चिराय ।
ध्यायन् स्मरन् मङ्गलमङ्गलं तज्ज्योतिःस्वरूपं जगदम्बिकायाः ॥५२॥
तदनु सजननीकान् मित्रवर्यान् समग्रान् ।
निजमनुभवमेवंभूतमाह स्म दिव्यम् ।
वचसि च भगवत्याः श्रद्दधानो मनस्वी ।
परिकरमफझुल्लं हन्तुमुच्चैर्बबन्ध ॥५३॥

॥ इति श्रीशिवराज्योदये महाकाव्ये १९ सर्गः समाप्तः ॥

## श्रीशिवराज्योदये महाकाव्ये २० (विंशः) सर्गः

ततः कदाचिद् रिपुसर्वनाशचिन्तासमाधिस्थममुं शिवाजिम् ।
बहिश्चरप्राणसमैः स्वपुत्रैः कश्चित् समेतः प्रवयाः प्रवीरः ॥१॥
कान्होजिमाख्यातपवित्रशीलं तमागतं वीक्ष्य सपञ्चपुत्रम् ।
सम्मानयन्नादरतः शिवाजिः पप्रच्छ वार्तं सहशत्रुवार्तम् ॥२॥
अकृत्रिमं हार्दमथैतदीयं वृद्धं तदाकस्मिकदर्शनेन ।
सरः प्रसन्नं परिपूर्णतोयम् आकालिकेनेव सुवर्षणेन ॥३॥
सुतांस्तदीयान् स्वसहोदराभान् आश्लिष्य सौहार्दवशंगतोऽसौ ।
स्वीयानि रत्नाभरणानि तेषां बबन्ध कण्ठश्रुतिबाहुभागे ॥४॥
वृद्धः स यूनोऽपि पदावमुष्य स्पृशन् सुदूरानतमस्तकेन ।
वाणीमनादाय ददौ च तस्मै पत्रं नवोपायनवद् विचित्रम् ॥५॥
सकौतुकोऽसौ कुतुकास्पदं तद् द्रष्टुं सुहृत्पत्रमभूच्छिवाजिः ।
द्रुतं समुद्घाटच विशाललोलनेत्रद्वयेनेव पपौ समग्रम् ॥६॥
तन्मित्रपत्रं निजशत्रुनाममुद्राङ्कितं वीक्ष्य सरोषचेताः ।
तथापि सौम्यस्मितवक्त्रशाली निगूढभावां तमुवाच वाचम् ॥७॥
यदत्रपत्रे लिखितं त्वदर्थे पुनस्तदुच्चैः श्रृणु वाचयामि ।
वदन्निति स्पष्टगभीरवाचा तद् दुस्सहार्थं स पपाठ पत्रम् ॥८॥
विध्वंसकः सकलकाफिरमन्दिराणां निर्दालकश्च हतहैन्दवदैवतानां ।
इस्लामराज्यरिपुवंशमहाकुठारो वीरोऽफझुल्ल इदमादिशति स्वयं वः ॥

अज्ञानिना हतधिया गिरिमूषकेण
शाहात्मजेन रिपुणा शिवनामकेन ।
मोहाज्जिताः खलु विजापुरराज्यवश्याः
नानाविधा हि गिरिजाङ्गलसिन्धुदुर्गाः ॥१०॥
उत्पीडिता विनिहता परिलुण्टिताश्च
मद्धर्मबान्धवगणा सततं समन्तात् ।
येनोद्धतेन तमहं विनिहन्तुमेव
सम्प्रस्थितोऽस्म्यगणितोग्रबलानुयातः ॥११॥
तत् सन्दिशामि सकलान् स्फुटमेतदेव
युष्मान् मदीयरिपुसङ्गतिनष्टबुद्धीन् ।
त्यक्त्वाऽनुबन्धमचिरादधमेन तेन
मत्पादधूलिमधिधत्त नतेन मूर्ध्ना ॥१२॥

सम्बन्धिनो यदि वसन्ति रिपोरमुष्य
ग्रामे वने निकटवर्तिनि पर्वते वा ।
आदेशमेनमधिगम्य ममाखिलास्ते
सर्पाभिघातमचिरात् खलु कुट्टनीयाः ॥१३॥

यः पालयिष्यति मदीयमिमं निदेशं
स प्रीतिपात्रमिव मे भविता भवत्सु ।
सम्राडसौ मम वचोभिरमुष्य नूनं
पार्यन्तिकं किमपि मङ्गलमेव कुर्यात् ॥१४॥

यः किन्तु दुर्मतिरनादरमत्र पत्रे
सन्दर्शयिष्यति मनागपि शत्रुवश्यः ।
भूगर्भलीनमपि तं हि गवेषयित्वा
यन्त्रे कुटुम्बसहितं खलु निष्पिनष्मि ॥१५॥

दृष्टं महाभाग रिपोरिदं मे पत्रं समग्रं भयलोभहेतु ।
तदात्मभूवित्तसुरक्षणाय पथ्यं भवानाचरितुं स्वतन्त्रः ॥१६॥

जानामि सर्वत्र हि मण्डलेऽस्मिन् ये केचिदस्मद्भविकानुकलाः ।
सन्तर्जितास्ते रिपुणैवमेव पत्रैः सपत्रैरिव कालसर्पैः ॥१७॥

शृणोमि पाशैरिव शत्रुपत्रैरेभिर्मदीयाः सुहृदोऽपि केचित् ।
कुरङ्गमातङ्गवदात्मनैव रिपोर्वशं यान्ति निबद्धकल्पाः ॥१८॥

ये यान्ति यास्यन्ति च वा दिनेन ते यान्तु सर्वे झटिति क्षणेन ।
कुतो भयं मे खलु यावदेषा जयप्रदा हस्तगता भवानी ॥१९॥

इत्यूचिवानुद्धृतदीर्घखड्गतीव्राग्रनिर्दिष्टबहिःप्रदेशः ।
बभाण वर्षिष्ठममुं युवाऽसौ स एष पन्था हितरक्षणस्य ॥२०॥

स्वराज्यसंस्थापनमूढबुद्धेरहो ममार्थे भवता किमर्थम् ।
संसारसौख्यैकनिदानभूतं विनाश्यते भूगृहवित्तजातम् ॥२१॥

सम्प्रेरितः कर्मणि साहसोग्रे येनाहमाबाल्यत ईश्वरेण ।
ईष्टे मदीयेऽपजये जये वा कर्ताऽथवा कारयिता स एव ॥२२॥

वृद्धोऽसि सत्पुत्रकलत्रवांश्च कुरुष्व तद् यत् स्वहितोचितं ते ।
आश्रीयतामाह्वयते स यस्त्वां पार्यन्तिकं दित्सति मङ्गलं च ॥२३॥

वाचं शिवाजेरिति कर्णरन्ध्रविदारणोग्रां सहसैव शृण्वन् ।
स्वस्वामिभक्तिं प्रहतां स मेने हृन्मन्दिरस्थामिव तां भवानीम् ॥२४॥

उदश्रुपूराप्लुतलोचनान्धो बाष्पातिरेकाहतकण्ठभूकः ।
मूर्च्छान्धकारे प्रविशन्निवाऽसौ पपात वृद्धः पदयोः शिवस्य ॥२५॥

शिवाङ्घ्रिसंस्पर्शवशात् स्वसंज्ञां पुनः प्रपन्नः स पदप्रपन्नः ।
कुतो नु संज्ञाविरहोऽल्पशोऽपि कल्पेत सञ्जीवनमन्त्रयोगे ॥२६॥
रोषादिवावेशवशात् तमूचे प्राणप्रियं स्वामिनमात्मनोऽसौ ।
खड्गस्तवायं कर एव राजंस्तक्ष्णोसि तन्मां किमु वाग्भिरेव ॥२७॥
त्वत्पादसेवाप्रतिकूलमेवं स्वप्नेऽपि लोभेन भयेन जातु ।
संकल्पितं यन्न मयाऽधमेन वितर्कितं देव कथं त्वया तत् ॥२८॥
स्वातन्त्र्यलक्ष्म्याश्चरणोपहारं चिकीर्षसे चेन्नरशीर्षपद्मैः ।
त्वन्नेत्रसंकेततृणीकृतात्मा स्वपुत्रशीर्षाण्यपि कर्तितास्मि ॥२९॥
त्वत्कांक्षितं दुर्घटमप्यकस्मात् संपूरयिष्याम्यधुनैव राजन् ।
प्रविश्य दावाग्निमुपेत्य वार्ब्धि निष्पेष्य वाद्रिं प्रविदार्य वाभ्रम् ॥३०॥
यतः प्रभृत्येव नवस्वराज्यसंस्थापनैकोग्रमहाव्रतस्त्वम् ।
ततोऽयमाकाङ्क्षति दास एष त्वत्कार्यसत्रे ससुतात्महोमम् ॥३१॥
हा पश्चिमेऽस्मिन् वयसि प्ररोहेत् चित्ते मदीये ह्यभिलाषवन्ध्ये ।
कथंचन स्वार्थविषाङ्कुरश्चेद् वंशोऽखिलो मे नरकं प्रतीयात् ॥३२॥
स्वधर्म-गो-ब्राह्मणजन्मभूमित्राणार्थमादेशमनु त्वदीयम् ।
कायं पतत्वेतदिति प्रकामं याचे दिवानक्तमहं महेशम् ॥३३॥
इत्थेवमात्माहितजीवितस्य वृद्धस्य तस्योत्कटभक्तिभाजः ।
निपीय वाणीममृतायमानां शिवाजिरन्तर्नितरां जहर्ष ॥३४॥
प्रसार्य बाहू प्रणयातिरेकाद् आनन्दपूताप्लुतदीप्रनेत्रः ।
गाढं तमालिङ्गितुमभ्यसर्पत् वीरः स वर्षिष्ठमभङ्गधीरम् ॥३५॥
सुदुर्लभाश्लेषसुखप्रसन्नं तमाह विश्वासमयीं स वाचम् ।
भवत्सहायोऽहमरातिमेनं जेतास्मि निश्चप्रचमेव शीघ्रम् ॥३६॥
गत्वा निजग्राममितोऽचिरेण कार्यं त्वया कार्यमिदं मदर्थे ।
ये केचनैवं रिपुणोग्रपत्रैः सन्तर्जितास्ते स्ववशीक्रियन्ताम् ॥३७॥
अथात्मनः पूज्यतमस्य भर्तुरादेशमेवं परिगृह्य मूर्ध्ना ।
श्रान्तोऽप्यविश्रम्य महत्तरोऽसौ यथागतं ग्राममगात् स्वकीयम् ॥३८॥
कैङ्कर्य-दक्षान् स्वसुतांश्च सर्वान् स प्रेषयामास निमन्त्रणार्थम् ।
सर्वत्र शत्रुप्रहितोग्रपत्रभयाकुलानां निजबान्धवानाम् ॥३९॥
तदीयसंदेशमलङ्घनीयं प्राप्यैव कालानतिपातमायन् ।
सातङ्कशङ्काः खलु बान्धवास्ते पुरा प्लवङ्गा इव वानरेशम् ॥४०॥
रात्रौ रहस्तानखिलान् स्वगेहे सम्मीलितान् संशयलोलचित्तान् ।
निर्मक्षिकत्वं परितो निरीक्ष्य प्रचक्रमे मन्दमसौ प्रवक्तुम् ॥४१॥
हे भ्रातरः प्राणसमाः समस्ताः समानशीलव्यसना वयं स्मः ।
व्यालम्बते यद् व्यसनं हि मूर्ध्नि परीक्षते शीलमिवाद्य तन्नः ॥४२॥

यत्तर्जनापत्रमिदं करे मे संदृश्यते कुण्डलिताहिकल्पम् ।
तदीहते नो ग्रसितुं हि जीवं प्रेष्ठं ततो वा सुदृढाभिमानम् ।।४३।।
सम्प्रेरितं पत्रमयं समन्तात् सर्पास्त्रमेतद् रिपुणा निगूढम् ।
तस्य प्रतीकारविधेर्विधानं जिज्ञासतेऽयं स्थविरो भवत्तः ।।४४।।
प्रागेव दोलायितचेतसस्ते पुरःस्थितां वीक्ष्य पुनः समस्याम् ।
निगूहितुं चञ्चलतां स्वकीयां प्रत्युत्तरं प्रश्नमयं हि चक्रुः ।।४५।।
हे तात! वृद्धस्य वचोऽभिनन्द्यमापत्सु बालैरिति नीति-रीतिः ।
तस्माद् दुरूहप्रतिकारयोगे कृच्छ्रेऽधुना किं नु चिकीर्षसि त्वम् ।।४६।।
अत्र स्थितानां हि वयस्तपोभिस्त्वमेव नेता खलु सारदृश्वा ।
यदादिशस्यात्ममतानुकूलं तन्नः शिरोधार्यमवेहि सर्वम् ।।४७।।
उक्त्वेति तद्वाक्यमपेक्षमाणा विनम्रशीर्षा न यदा बभूवुः ।
तदोच्चकैः केसरिगर्जिताभं संशुश्रुवे वृद्धवचः समस्तैः ।।४८।।
शृण्वन्तु सर्वेऽवहिता युवानः मनीषितं स्थेष्ठमिदं मदीयम् ।
शरीरमेतन्मम वार्थजातं शिवैकसेवार्पितमेव नूनम् ।।४९।।
शिवः स च त्यक्तहिमाद्रिवासः सह्याचलेऽस्मिन्नधुनाऽभ्युपेतः ।
शिवाजिरूपेण जगद्धितार्थं करोति भव्या नरवीरलीलाः ।।५०।।
श्रद्धा ममाद्धा सुदृढेवमेव न जातु लोभान्न भयाच्चलेत् सा ।
तन्मत्पथे चेत् पदमर्पणीयं निर्दह्यतां शात्रवपत्रमेतत् ।।५१।।
इत्यूचिवान् पत्रमदः करस्थं पुरःस्थमन्दज्वलदग्निकुक्षौ ।
निक्षिप्य चिक्षेप स चक्षुरारात् सुहृज्जनानीक्षितुमात्मनीनान् ।।५२।।

ज्वलत्पत्ररोचिर्विराजन्मुखास्ते
समुत्तस्थुरावेशतः सर्व एव ।
विनिष्कास्य खड्गांस्तडिद्दीप्रधारान्
जगर्जुर्जयोद्घोषणां श्रीशिवस्य ।।५३।।

वृद्धः स तं जयजयेति निनादमुच्चै-
रुच्चारितं प्रियसुहृद्भिरुदूढधैर्यैः ।
आकर्णयन्नतितरां परितुष्टचेता
मेने जयः स्वयमुपैति शिवं प्रतीति ।।५४।।

।। इति श्रीशिवराज्योदये महाकाव्ये २० सर्गः समाप्तः ।।

